श्रीशास्तास्तुतिदशकं
आशानुरूपफलदं चरणारविन्द-
भाजामपारकरुणार्णवपूर्णचन्द्रम् ।
नाशाय सर्वविपदामपि नौमि नित्य-
मीशानकेशवभवं भुवनैकनाथम् ॥ १
पिञ्छावली वलयिताकलितप्रसून-
सञ्जातकान्तिभरभासुरकेशभारम् ।
शिञ्जानमञ्जुमणिभूषणरञ्जिताङ्गं
चन्द्रावतंसहरिनन्दनमाश्रयामि ॥ २
आलोलनीलललिताळकहाररम्य-
माकम्रनासमरुणाधरमायताक्षम् ।
आलम्बनं त्रिजगतां प्रमथाधिनाथ-
मानम्रलोकहरिनन्दनमाश्रयामि ॥ ३
कर्णावलम्बिमणिकुण्डलभासमान-
गण्डस्थलं समुदिताननपुण्डरीकम् ।
अर्णोजनाभहरयोरिव मूर्तिमन्तं
पुण्यातिरेकमिव भूतपतिं नमामि ॥ ४
उद्दण्डचारुभुजदण्डयुगाग्रसंस्थं
कोदण्डबाणमहितान्तमतान्तवीर्यम् ।
उद्यत्प्रभापटलदीप्रमदभ्रसारं
नित्यं प्रभापतिमहं प्रणतो भवामि ॥ ५
मालेयपङ्कसमलङ्कृतभासमान-
दोरन्तराळतरळामलहारजालम् ।
नीलातिनिर्मलदुकूलधरं मुकुन्द-
कालान्तकप्रतिनिधिं प्रणतोऽस्मि नित्यम् ॥ ६
यत्पादपङ्कजयुगं मुनयोऽप्यजस्रं
भक्त्या भजन्ति भवरोगनिवारणाय ।
पुत्रं पुरान्तकमुरान्तकयोरुदारं
नित्यं नमाम्यहममित्रकुलान्तकं तम् ॥ ७
कान्तं कळायकुसुमद्युतिलोभनीय-
कान्तिप्रवाहविलसत्कमनीयरूपम् ।
कान्तातनूजसहितं निखिलामयौघ-
शान्तिप्रदं प्रमथयूथपतिं नमामि ॥ ८
भूतेश भूरिकरुणामृतपूरपूर्ण-
वारान्निधे, वरद, भक्तजनैकबन्धो । परमभक्त
पायाद्भवान् प्रणतमेनमपारघोर-
संसारभीतमिह मामखिलामयेभ्यः ॥ ९
हे भूतनाथ भगवन्, भवदीयचारु-

पादाम्बुजे भवतु भक्तिरचञ्चला मे ।
नाथाय सर्वजगतां भजतां भवाब्धि-
पोताय नित्यमखिलाङ्गभुवे नमस्ते ॥ १०
इति श्री शङ्करभगवद्पाद विरचितं
श्री शास्तास्तुति दशकं सम्पूर्णम् ॥